ePathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रसंख्या (Paper Number) | 02 | |
| पत्रविषयः (Title) | व्याकरणम् एवं भाषाविज्ञानं च<br>Grammar and Linguistics | |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number& Module Name) | 31, शतृशानच्प्रत्ययान्तविषयकविचारः<br>(Endings of *shatri* and *shanach* affixes) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • शतृशनचोः प्रयोगविषयः<br>• शतृप्रत्ययविषयकविवेचनम्<br>• पुंलिङ्गे शतृप्रत्ययान्तरूपिसद्धिप्रकारः | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो. विनोदकुमारझाः<br>आचार्यः, व्याकरणविभागस्य, श्रीसोमनाथसंस्कृत युनिवर्सिटी, वेरावल, गुजरातः | डॉ. यदुवीरस्वरूपशास्त्री<br>सहायकप्राध्यापकः, व्याकरणविभागस्य, लखनऊ परिसरः, राष्ट्रियसंस्कृतसंस्थानम्, लखनऊ, उत्तरप्रदेशः | प्रो. आर्, देवनाथन्<br>प्राचार्यः,<br>राष्ट्रियसंस्कृतसंस्थानम्,<br>जम्मूपरिसरः, जम्मू |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P4_M31 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयानुक्रमः

- शतृशानचो: प्रयोगविषय:
- शतृप्रत्ययविषयकविवेचनम्
- पुंल्लिङ्गे शतृप्रत्ययान्तरूपसिद्धिप्रकार:
- शत्रन्तपदं प्रयुज्य वाक्यनिर्माणम्
- शतृप्रत्ययान्तशब्दस्य पुंल्लिङ्गे रूपमाला
- सर्वासां विभक्तीनां वाक्ये कथं प्रयोग:
- स्त्रीलिङ्गे शतृप्रत्ययान्तरूपसिद्धिप्रकार:
- शतृप्रत्ययान्तशब्दस्य स्त्रीलिङ्गे रूपमाला
- शतृप्रत्यये स्त्रियां नुम् व्यवस्था
- नपुंसकलिङ्गे शतृप्रत्ययान्तस्य प्रयोगविषय:
- शानच्प्रत्ययविषयकविवेचनम्
- शानजन्तस्य कर्मणिप्रयोग:
- शानजन्तस्य कर्मण: विशेषणत्वे वाक्यप्रयोग:

- **शतृशानचो: प्रयोगविषय:**

वाक्यनिर्माणे शत्रन्तस्य शानजन्तस्य वा प्रयोग: कथं क्रियते? कदा क्रियते? पुंल्लिङ्गे, स्त्रीलिङ्गे, नपुंसकलिङ्गे च शत्रन्तशानजन्तरूपाणि कथं भवन्ति? नुमागमव्यवस्थादिविषये विचार: कृतोऽस्ति।

साम्प्रतं शतृशानचोः प्रयोगविषयं विचारयामः। **'लटः शतृशानचाव-प्रथमासमानाधिकरणे** (3-2-124) इति सूत्रमप्रथमान्तेन सामानाधिकरण्ये सति शतृशानचौ आदेशौ लट्लकारस्य स्थाने करोति। यद्यप्यादेशरहितस्य लटः प्रयोगाभवात् सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तद् दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते। अस्मिन् सूत्रे **नन्वोर्विभाषा** इति सूत्रात् विभाषा पदमनुवर्तते। सा च विभाषा व्यवस्थितविभाषा। तेन प्रथमा सामानाधिकरण्ये विभाषा शतृशानचावादेशौ भवतः इति वृत्तिकारादयो ब्रुवते। यथा च- सन् ब्राह्मणः, विद्यमानो ब्राह्मणः, अधीयानो ब्राह्मणः इत्यादयः प्रयोगा जायन्ते। पक्षे शतृशानच्-प्रत्ययाभावे तु अस्ति ब्राह्मणः, विद्यते ब्राह्मणः, अधीते ब्राह्मणः, इत्यादीनि च रूपाणि भवन्ति। अत्र प्रसङ्गे श्रीमता भट्टोजीदीक्षितेन तु अस्य सूत्रस्य प्रपञ्चावसरे एवम् अभ्यधायि- "लडित्यनुवर्तमाने ('वर्तमाने लट्' इति पूर्वसूत्रादनुवृत्तस्य लडित्यस्य षष्ठ्या विपरिणमेन उक्तार्थलाभे सतीत्यर्थः) पुनर्लड्ग्रहणमधिकविधानार्थम् (सूत्राक्षरानारूढस्यापि अर्थस्य लाभार्थमित्यर्थः)। तेन प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः"। वाग्व्यवहारादर्शकारस्त्वेवमाह "प्रथमान्तेन सामानाधिकरण्ये शतृशानचौ यन्नेच्छति सूत्रकारस्तत्रायमाशयोऽस्य लक्ष्यते- लडादेशौ शतृशानचौ कृतौ। तेन कृत्तद्धितसमासाश्चेति शत्रन्तं शानजन्तं वा शब्दस्वरूपं प्रातिपदिकं भवतीति। शब्दशक्तिस्वाभाव्याद् विशेषणं भूत्वा वर्तमानकालिकगत्यादिक्रियायाः कर्तारं कर्म वा यथाविवक्षमाह। न तु तिङन्तवद् देवदत्तादिकर्तृकवर्तमानकालिकगत्यादिक्रियामिति विधेयत्वेन तस्य स्मृतित्वात् इति व्यवस्थितविभाषामाश्रयतां व्याख्यातृणामाशयः"।

- **शतृशानच्प्रत्ययान्तविषयकविवेचनम्**

**तत्र आदौ शतृप्रत्ययविषयकविवेचनं प्रस्तूयते-**

परस्मैपदिनः आत्मनेपदिनः उभयपदिनः इति त्रिविधा धातवो वर्तन्ते। परस्मैपदिधातुभ्यो वर्तमानकालार्थे शतृप्रत्ययो जायते। 'शतृ' इत्यत्र प्रत्यये 'अत्' इति भागः अवशिष्यते, ऋकारस्य इत्संज्ञायां लोपत्वादिति। शतृप्रत्यये कृते सति शत्रन्तं

प्रातिपदिकं सिध्यति। शत्रन्तस्य पदस्य प्रयोगो वाक्ये विशेषणरूपेण क्रियते। शत्रन्तानि पदानि विशेष्यानुसारेण पुंलिङ्ग-नपुंसकलिङ्गभेदात् विभिन्नानि रूपाणि प्राप्नुवन्ति।

**यथा- लट् लकारे 'लिखति' इति प्रयुज्यते, तस्य शत्रन्ते पुंलिङ्गे- लिखन् इति रूपम्।**

**स्त्रीलिङ्गे - लिखती इति रूपम्**

**नपुंसकलिङ्गे- लिखत् इति रूपम्**

- **पुंल्लिङ्गे शतृप्रत्ययान्तस्य रूपस्य सिद्धिप्रकारः**

शत्रन्तपुंल्लिङ्गे प्रथमाविभक्त्यैकवचनान्तरूपं वर्तमानकालिकलट्लकारस्य प्रथमपुरुषबहुवचनेन सह साम्यं भजते। यदि बहुचनरूपस्य 'ति' भागः पृथक् क्रियते, तदा अवशिष्टो भाग एव प्रथमाविभक्तेः एकवचनबोधक: पुंल्लिङ्गे शत्रन्तभागो भवतीति। **यथा-** 'लिख्' धातोः लट्लकारस्य प्रथमपुरुषबहुचने रूपं 'लिखन्ति' इति। अस्मिन् रूपे 'ति' इति भागः पृथक् क्रियते, तदा अवशिष्टो भाग: 'लिखन्' इति पुंलिङ्गे भवति। इदमेव शत्रन्तस्य प्रथमैकवचनान्तं पदम्। एतद्रूपं ज्ञातं चेत् तर्हि अन्येषु वचनेषु, अन्यासु विभक्तिषु च रूपाणि सारल्येन ज्ञातुं प्रभवन्ति।

उपरि निर्देशानुसारेणैव अन्यानि रूपाणि निर्मातुं शक्यन्ते-

पश्यन्ति - पश्यन्
पठन्ति - पठन्
कुर्वन्ति - कुर्वन
चलन्ति - चलन्
पतन्ति - पतन्
खादन्ति - खादन्

इत्यादिः। पश्यन्, पठन्, इत्यादीनां शतृप्रत्ययान्तानां मूलरूपं भवति 'पश्यत्' 'पठत्' इत्यादि। 'पठत् इत्यत्र भागद्वयम्- पठ्-अत् इति। 'पठ्' इति धातुः। अत् इति प्रत्ययः। प्रत्ययस्य नाम 'शतृ' (अत) इति अस्य रूपस्यान्ते शत् (अत्) इति प्रत्ययो भवति, पठत् शतृप्रत्ययान्तं रूपम्। अतः पश्यत्, पठत् लिखत् इत्यादीनि शतृप्रत्ययान्तरूपाणि। पुंल्लिङ्गे पश्यन्त्, पठन् इत्यादि रीत्यां प्रथमैकवचने रूपाणि।

- **शत्रन्तं पदं प्रयुज्य वाक्यनिर्माणम्**

अस्य पाठस्य आदौ एव प्रोक्तं यत् परस्मैपदिधातुभ्यो वर्तमानकालार्थे शतृप्रत्ययो भवति। अतो वर्तमानेऽर्थे शतृप्रत्ययस्य प्रयोगो भवति।

**यथा-** देवदत्तः पुस्तकं पठति गच्छति। अथवा देवदत्तः पठनसमकालं गच्छति इति वर्तमानक्रियाबोधकं वाक्यद्वयं प्रयुक्तम्। तस्य वाक्यद्वयस्य शतृप्रत्यये कृते सति-

देवदत्तः पुस्तकं पठन् गच्छति। चैत्रः गीतं श्रवणसमकालं हसति

अथवा

चैत्रः गीतं शृणोति, हसति।

**शत्रन्ते-** चैत्रः गीतं शृण्वन् हसति।

पुत्रः चित्रं पश्यति कथयति। (दर्शनसमकालम्)

**शत्रन्ते-** पुत्रः चित्रं पश्यन् कथयति।

वानरः वृक्षम् आरोहति, खादति। (आरोहणसमकालम्)

**शत्रन्ते-** वानरः वृक्षम् आरोहन्, खादति।

अत्रोदाहरणेषु दृष्टेषु शत्रन्तरूपेषु प्रथमैकवचने चरमे 'न्' (पठन्, लिखन्) इत्यवलोकितम्। किन्तु जुहोत्यादिगणे पठितानां धातूनां एवं प्रकारेण 'न' इति न श्रूयते अपि तु तकारः श्रूयते इति। तद्गणे च ददाति, दधाति, जुहोति चेतीमानि प्रसिद्धानि रूपाणि। एतेषां शत्रन्तं रूपं 'ददत्' 'दधत्' जुह्वत् इति। न तु ददन्, दधन्। दाधातो: वाक्ये शत्रन्त रूपं एवं प्रयोक्तव्यम्— चैत्रः पुस्तकं ददत् हसति।



- **शतृप्रत्ययान्तशब्दस्य पुंल्लिङ्गे रूपमाला-**

| | एकवचनम् | द्विवचनम् | बहुचनम् |
|---|---|---|---|
| प्र. | पठन् | पठन्तौ | पठन्तः |
| द्वि | पठन्तम् | पठन्तौ | पठतः |
| तृ. | पठता | पठद्भ्याम् | पठद्भिः |
| च. | पठते | पठद्भ्याम् | पठद्भ्यः |
| प. | पठतः | पठद्भ्याम् | पठद्भ्यः |
| ष. | पठतः | पठतो: | पठताम् |
| स. | पठति | पठतो: | पठत्सु |
| सं. | हे पठन् | पठन्तौ | पठन्त: |

- **साम्प्रतं सार्वासां विभक्तीनां वाक्ये कथं प्रयोग इति विचार:**

1. शतृप्रत्ययान्तरूपस्य प्रथमादिविभक्तौ एकवचने, द्विवचने, बहुवचने च प्रयोगः।
   कृष्णः पठन् हसति।
   कृष्णौ पठन्तौ हसतः।
   कृष्णाः पठन्तः हसन्ति।
2. कृष्णः पठन्तं बालकं पश्यति।
   कृष्णः पठन्तौ बालकौ पश्यति।
   कृष्णः पठतः बालकान् पश्यति।
3 पठता कृष्णेन कार्यं साधितम्।
   पठद्भ्यां कृष्णाभ्यां कार्यं साधितम्।
   पठद्भिः कृष्णैः कार्यं साधितम्।
4. चैत्रः पठते कृष्णाय मोदकं दत्तवान्।
   चैत्रः पठद्भ्यां कृष्णाभ्यां मोदकं दत्तवान्।
   चैत्रः पठद्भ्यः कृष्णेभ्यः मोदकं दत्तवान्।
5. पठतः कृष्णात् पुस्तकं गृहीतवान्।
   पठद्भ्यां कृष्णाभ्यां पुस्तकं गृहीतवान्।
   पठद्भ्यः कृष्णेभ्यः पुस्तकं गृहीतवान्।
6. पठतः कृष्णस्य मुखं पश्यतु।
   पठतोः कृष्णयोः मुखं पश्यतु।
   पठतां कृष्णानां मुखं पश्यतु।
7 पठति कृष्णे उद्वेगो नास्ति।
   पठतोः कृष्णयोः उद्वेगो नास्ति।
   पठत्सु कृष्णेषु उद्वेगो नास्ति।

- **स्त्रीलिङ्गे शतृप्रत्ययन्तरस्य रूपस्य सिद्धिप्रकारः।**

इतः पूर्वं वयं वर्तमानकालिकक्रियापदस्य प्रथमबहुबचनरूपं दृष्ट्वा शतृप्रत्ययान्तस्य पुंलिङ्गरूपं ज्ञातुं शक्यते इति ज्ञातवन्तः। वदन्ती, पश्यन्ती, लिखन्ती पठन्ती इत्यादीनि स्त्रीलिङ्गरूपाणि भवन्ति। आदावेव प्रोक्तं यद् शत्रन्तं शानजन्तं वा रूपं विशेषणतया प्रयुज्यते। यदि विशेष्यं पुंलिङ्गं तर्हि शतृशानजन्तरूपमपि पुंलिङ्गम्। विशेष्यं यदि स्त्रीलिङ्गं तर्हि शतृशानजन्तमपि स्त्रीलिङ्गं भविष्यति विशेषणत्वादिति।

**यथा-** राधिका क्रीडन्ती अस्ति।
सीता वदन्ती अस्ति। गीता पश्यन्ती अस्ति।

- **शतृप्रत्ययान्तशब्दस्य स्त्रीलिङ्गे रूपमाला**

| | | | |
|---|---|---|---|
| प्र. | पठन्ती | पठन्त्यौ | पठन्त्यः |
| द्वि. | पठन्तीम् | पठन्त्यौ | पठन्तीः |
| तृ. | पठन्त्या | पठन्तीभ्याम् | पठन्तीभिः |
| च. | पठन्त्यै | पठन्तीभ्याम् | पठन्तीभ्यः |
| पं. | पठन्त्याः | पठन्तीभ्याम् | पठन्तीभ्यः |
| ष. | पठन्त्याः | पठन्त्योः | पठन्तीनाम् |
| स. | पठन्त्याम् | पठन्त्योः | पठन्तीषु |

आसां सर्वासां विभक्तीनां वाक्ये प्रयोगः, यथा पुंल्लिङ्गे प्रदर्शितः, तथैव अत्रापि विचिन्त्य करणीयः इति।

1. राधिका पठन्ती अस्ति।
2. राधिका लिखन्ती अस्ति।
3. राधिका पश्यन्ती अस्ति।
4. राधिका कुर्वती अस्ति।

अत्र उपरि त्रिषु उदाहरणेषु नकारसहितं 'पठन्ती' इत्यादिरूपाणि दृष्टानि, किन्तु चतुर्थे उदाहरणे 'कुर्वती' इति नकाररहितं रूपं दृष्टम्। नकारसहितं 'कुर्वन्ती' इति रूपं तु असाधु एव। एवं सति क्व नकारसहितं क्व च नकाररहितं रूपं इति जिज्ञासायां प्रोच्यते-

- **शतृप्रत्यये स्त्रियां नुम् व्यवस्था**

पाणिनीयव्याकरणे धातवो दशसु गणेषु पठिताः सन्ति। ते च दश गणः क्रमेण अधोलिखिताः सन्ति।

1. भ्वादिगणः
2. अदादिगणः
3. जुहोत्यादिगणः
4. दिवादिगणः
5. स्वादिगणः
6. तुदादिगणः
7. रुधादिगणः
8. तनादिगणः

9. क्रयादिगणः
10. चुरादिगणः

अत्र पठितेषु गणेषु- प्रथमगणीयानां परस्मैपदिधातूनां चतुर्थगणीयानां परस्मैपदि धातूनां, दशमगणीयानां परस्मैपदिधातूनां च नुमागमो नित्यं भवति। **यथा-** प्रथमे गणे भूधातुः, तस्य भवन्ती। चतुर्थगणे - दिवधातुः - तस्य - दीव्यन्ती। दशमगणे- चुरधातुः - तस्य - चोरयन्ती।

षष्ठगणीयानां परस्मैपदिधातूनां नुमागमो विकल्पेन भवति। द्वितीयगणे पठितानां तु केवलं चतुर्दश धातूनामेवेति। यथा- षष्ठगणे - तुदधातुः - तुदती/तुदन्ती।

द्वितीयगणे- (1) याती/यान्ती, (2) भाती/भान्ती, (3) स्नाती/स्नान्ती, (4) वाती/वान्ती, (5) द्राती/द्रान्ती, (6) पाती/पान्ती (6) ख्याती/ख्यान्ती/माती/मान्ती इत्यादयः प्रसिद्धाः। द्वितीये (चतुर्दशधातून् विहाय), तृतीये, पञ्चमे, सप्तमे, अष्टमे, नवमे च गणे पठितानां परस्मैपदिधातूनां नुमागमः न भवति। यथा-

| | | | | |
|---|---|---|---|---|
| द्वितीयगणे | - | द्विष्-धातुः | - | तस्य - द्विषती । |
| तृतीयगणे | - | दाधातुः | - | तस्य - ददती । |
| पञ्चमगणे | - | चिनुधातु | - | तस्य - चिन्वती । |
| सप्तमगणे | - | रुधधातुः | - | तस्य – रुधती । |
| अष्टमगणे | - | कृधातुः | - | तस्य – कुर्वती । |
| नवमगणे | - | क्रीञधातुः | - | तस्य – क्रीणती । |

**अत्र सारः-** येषां परस्मैपदिनां धातूनां लटि प्रथमपुरुषैकवचने 'ति' प्रत्ययात्पूर्वं ह्रस्वस्य अकारस्य श्रवणं भवति, तेषां धातूनां शत्रन्ते स्त्रियां नुम् भवति। अन्यत्र न भवति इति तात्पर्यार्थत्वेन स्वीकर्तुं शक्यम्। **यथा-** करोति-कुर्वती, पठति-पठन्ती।

- **नपुंसकलिङ्गे शतृप्रत्ययान्तस्य रूपस्य प्रयोगविषयः**

पठत्, लिखत्, गच्छत् इत्यादीनि शत्रन्तानि नपुंसकलिङ्गे रूपाणि। एतानि प्रथमाविभक्तौ एकवचनान्तानि रूपाणि। प्रायः पुंल्लिङ्गरूपवत् एव भवन्ति। पुंल्लिङ्गे पठन्, वदन्, कुर्वत् इत्यादिषु अन्ते नकारः श्रूयते, नपुंसकलिङ्गे तु पठत्, लिखत् इत्यादिषु

रूपेषु तकारः श्रूयते इति। अतः पुंल्लिङ्गे यत् प्रातिपदिकं भवति तदैव अत्र नपुंसकलिङ्गे प्रथमैकचनान्तं रूपम्। वर्तमानकालस्य प्रथमपुरुषबहुबचनान्तं रूपं दृष्टवा शत्रन्तपुंल्लिङ्गरूपं निर्णेतुं शक्नुमः इति तु प्राक् प्रपञ्चितम्। तेनैव प्रकारेण नपुंसकरूपाणि अपि बोधव्यानि।

उदाहरणानि-

1. मार्गे बसयानं गच्छदस्ति।
2. मनः चिन्तयदस्ति।
3. कार्यं प्रचलदस्ति।

**अत्र विशेषः-**

नपुंसकलिङ्गे शत्रन्तबहुवचनस्य वर्तमानकाले प्रथमपुरुषबहुवचनस्य च रूपं समानं भवति। **यथा-** कार्याणि प्रचलन्ति। अत्र वाक्ये वर्तमानकालबहुवचनान्तम्। कर्माणि प्रचलन्ति सन्ति। इत्यत्र शत्रन्तबहुवचनं नपुंसकलिङ्गे। अत्र शत्रन्तनपुंसकलिङ्गरूपं भवति तस्मिन् वाक्ये क्रियापदम् अपरं भवत्येव। **यथा-** द्वितीये वाक्ये 'सन्ति' इति क्रियापदम्। एतम् अंशं मनसि निधाय बहुवचने क्रियापदरूपस्य शत्रन्तनपुंसकलिङ्गरूपस्य च भेदः ज्ञातव्यः इति।

शत्रन्तनपुंसकलिङ्गरूपाणि प्रथमाविभक्तौ द्वितीयाविभक्तौ च शत्रन्तपुंल्लिङ्गात् भिन्नानि। अन्यासु विभक्तिषु तु पुंल्लिङ्गवदेव सर्वाणि रूपाणि भवन्ति। किञ्च विशेष्यस्य शब्दस्य लिङ्गं दृष्ट्वा शत्रन्तरूपस्य लिङ्गनिर्णयः कर्तव्यो भवति।



- **शतृप्रत्ययान्तस्य नपुंसकलिङ्गे रूपमाला**

| | ए.व. | द्वि. | ब.व. |
|---|---|---|---|
| प्र. | पठत् | पठती | पठन्ति |
| द्वि. | पठत् | पठती | पठन्ति इत्यादि। |

अग्रे सर्वाणि रूपाणि पुंल्लिङ्गवद् भवन्ति। अत्र सर्वासां विभक्तीनां वाक्ये प्रयोगः, भवन्तः पुंल्लिङ्गवत् कर्तुं शक्नुवन्ति।

इतः पूर्वं पुंल्लिङ्गे, स्त्रीलिङ्गे, नपुंसकलिङ्गे च सर्वासु विभक्तिषु यानि उदाहरणानि दृष्टानि, तेषु सर्वेषु एकम् एव शत्रन्तरूपं दृष्टम्। किन्तु कदाचित् एकस्मिन् एव वाक्ये द्वित्राणि, ततोऽप्यधिकानि वा शत्रन्तरूपाणि भवितुम् अर्हन्ति। यथा-

1. रुदन्तम् आगच्छन्तं पुत्रं पिता उन्नीतवान्।
2. रुदते आगच्छते बालकाय माता क्रुध्यति।

3.गीतं शृण्वन्तं पुत्रं, पाकं कुर्वती माता दृष्टवती।
इत्यलं शत्रन्तनिरूपणेन।

- **शानच्प्रत्ययविषयकविवेचनम्**

आत्मनेपदिधातुभ्यः शानच्प्रत्ययो वर्तमानार्थे भवति। (परस्मैपदिधातुभ्यः शतृप्रत्ययो भवति इति तु पूर्वमेव ज्ञातम्) शानच्प्रत्यये कृते सति 'आन्' इति भागोऽवशिष्यते। शानजन्तरूपाणि यथा- मोदमानः, सहमानः, पचमानः, वर्तमानः इत्यादीनि। वाक्ये प्रयोगो यथा-

1. कृष्णो मोदमानोऽस्ति।
2. बालको दुःखं सहमानोऽस्ति।
3. कालेशः कार्यं कुर्वाणोऽस्ति।
4. शिशुः शयानोऽस्ति।

एषु प्रथमोदाहरणे द्वितीयोदाहरणे च शानजन्ते रूपे'मान' इति रूपं श्रूयते। तृतीये चतुर्थे चोदाहरणे 'आन' इत्येव श्रूयते। तन्नाम- प्रथमे उदाहरणद्वये (म्-आन-मान) मकारोऽधिकतया श्रूयते। एष मकारः (मुक्) आगमसम्बन्धी। एवञ्च शानजन्तरूपं ज्ञातव्यञ्चेत् मकारः (मुगागमः) क्व विधेयः? क्व च न विधेय इत्यादौ अवश्यं ज्ञयेमिति।

इतः पूर्वं शतृप्रत्ययप्रसङ्गे शत्रन्तस्त्रीलिङ्गे क्व नकारो (नुम्) विधेयः, क्व च नेति निर्णयाय वर्तमानकालक्रियापदस्य प्रथमपुरुषैकवचनस्य रूपे 'ति' प्रत्ययतः पूर्वं कः स्वरोऽस्ति ज्ञातमेव। तथैव शानजन्तरूपे मकारविषयेऽपि (मुगागमविषये)। सहते मोदते, वर्तते, इत्यादिषु आत्मनेपदिरूपेषु तु 'ते' इति अन्ते श्रूयते इति विशेषः। तथा च 'ते' इत्यतः पूर्वं यदि ह्रस्वाकारोऽस्ति तदा शानजन्तरूपे मकारो (मुक्) योजनीयः। ह्रस्वाकारभिन्नोऽन्यः कोऽपि स्वरोऽस्ति चेत् मकारो (मुक्) न कर्तव्यः।

- **साम्प्रतमुदाहरणं पश्यामः**

1. सहते (सह-अ-ते) इत्यत्र 'ते' इत्यतः पूर्वं ह्रस्वाकारोऽस्ति। अतोऽत्र मकारो (मुगागमः) विधेयः। तथा च 'सहते' इत्यस्य शानजन्तरूपं 'सहमानः' इति। एवमेव मोदमानः (मोदते) वर्तमानः (वर्तते) प्रयतमानः (प्रयतते) इत्यादीनि रूपाण्यपीति।

शेते, कुरुते इत्यादौ तु (श-ए-ते) (कुर्-उ-ते) 'ते' इत्यतः प्राक् एकारः, उकारश्च वर्तते। ह्रस्वाकारो नास्ति। अतोऽत्र मुगागमो न भवतीति। तथा च शेते, कुरुते इत्येतयोः

शानजन्तं रूपं 'शयानः', कुर्वाणः इति। इत्थमेव दत्ते-दधानः, भुङ्क्ते-भुञ्जानः, क्रीणीते-क्रीणानः इत्यादीनि रूपाणि भवन्ति।

अत्र कानिचन वाक्यानि

1. परीक्षमाणः अध्यापकः सन्तोषं प्राप्तवान्।
2. लज्जमाना बालिका मौनम् आश्रितवती।
3. प्रकाशमानं नक्षत्रं भूमौ पतितम्।
4. लम्वमानं फलं बालकः स्वीकृतवान्।

एषु उदाहरणेषु शानजन्तं रूपं त्रिषु लिङ्गेषु प्रयुक्तम्। तथा च पुंलिङ्गे रामवत् रूपाणि भवन्ति, स्त्रीलिङ्गे रमावत्, नपुंसकलिङ्गे च फलवत् रूपाणि भवन्ति।

वाक्येषु प्रयोगकाले विशेष्यानुसारेण शानजन्त्यरूपस्य प्रयोगः कर्त्तव्यः। किञ्च शानजन्तपदानां सर्वासु विभक्तिषु प्रयोगः, शतृप्रत्ययान्ते यथा अधीतं तद्वद् एव प्रयोगः कर्त्तव्यः।

1. कृष्णः मोदमानः अस्ति।
2. मोदमानं कृष्णं पश्यतु।
3. मोदमानेन कृष्णेन नवनीतं स्वीकृतम्।
4. मोदमानाय कृष्णाय माता फलं ददाति।

इत्यादिरूपाणि। एवमेव अवशिष्टानां विभक्तिनामपि प्रयोगः कर्त्तुं शक्यते।

- **शानजन्तस्य कर्मणि प्रयोगः**

भुङ्क्ते, 'वर्धते', 'वन्दते' इत्यादयः आत्मनेपदिधातवः कर्तरिप्रयोगे सन्ति। अतः भुञ्जानः, वर्धमानः, वन्दमानः इत्यादीनि शानजन्तरूपाणि कर्तरिप्रयोगीयाणि।

भुज्यते, वर्ध्यते, वन्द्यते इत्यादीनि रूपाणि कर्मणिप्रयोगीयाणि इति वयं जानीमः। एतेषाम् अपि आत्मनेपदित्वम् इत्यतः एतेषाम् अपि शानच्प्रत्ययाः सम्भवन्ति। यथा- भुज्यमानाः/ना/नम्, वर्ध्यमानः ना/नम्, वन्द्यमानः/ना/नम् इत्यादयः। एषः शानच् कर्मणिरूपसम्बन्धी इत्यतः 'कर्मणि शानच्' इति उच्यते।

कर्मणिरूपेषु सर्वेषु 'ते' तः पूर्वं सर्वदा ह्रस्वः अकारः भवति एव। अतः कर्मणि सर्वेषु शानजन्तेषु मकारः (मुगगमः) भवति एव।

अत्र कानिचित् कर्मणि रूपाणां क्रियापदानां शानजन्तरूपाणि-

उच्यते - उच्यमानः

प्राप्यते - प्राप्यमाणः
प्रयुज्यते - प्रयुज्यमानः
लिप्यते - लिप्यमानः
क्रियते - क्रियमाणः
एवमेव अन्यानि अपि रूपाणि स्वयमेव बोधव्यानि।

कर्मणि अथवा भावे प्रयोगे सर्वेऽपि धातवः आत्मनेपदिनः एव भवन्ति। अतः कर्मणि अर्थे भावार्थे वा शानच्प्रत्यय एव भवति, न तु शतृप्रत्ययः। तथा च संग्रहेण वक्तुं शक्यते यत् कर्तर्यर्थे परस्मैपदिभ्यो धातुभ्यः शतृप्रत्ययः, आत्मनेपदिभ्यो धातुभ्यः शानच्प्रत्ययः। किन्तु कर्मणि भावार्थे वा प्रयोगे तु सर्वेभ्यो धातुभ्यः शानच्प्रत्यय एवोत्पद्यत इति। **यथा-**

सहते- सहमानः (कर्तरि शानजन्तम्)
सह्यते - सह्यमानः (कर्मणि शानजन्तम्)
लिखति - लिखन् (कर्तरि शत्रन्तम्)
लिख्यते - लिख्यमानः (कर्मणि शानजन्तम्)

- **कर्मणि शानजन्तस्य कर्मणः विशेषणत्वे वाक्यप्रयोगः**

इतः पूर्वं कर्तरि प्रयोगविषये कर्मणिप्रयोगविषये च अस्माभिः अधीतमेव। तत्र च कर्तरि प्रयोगे कर्तृपदस्यक्रियापदस्य, कर्मणिप्रयोगे कर्मपदस्य क्रियापदस्य च सम्बन्धो भवति इत्यपि पठितमेव। यथा- देवदत्तः ग्रामं गच्छति,। इति कर्त्तरिप्रयोगे देवदत्तः इति कर्तरिपदस्य गच्छति इति क्रिया पदस्य च मिथः सम्बन्धः वर्तते।

देवदत्तेन ग्रामः गम्यते इति कर्मणि प्रयोगे तु ग्रामपदस्य पठ्यते इति क्रिया पदस्य च मिथः सम्बन्धः वर्त्तते। अनेनैव प्रकारेण कर्तरिप्रयोगे शतृशानजन्तयोः सम्बन्धोऽपि कर्तृपदेन सह एव भवति। कर्मणि शानजन्तस्य सम्बन्धस्तु कर्मणि पदेन सह एव भवति। अत्र एष अभिप्रायः कर्तृबोधकं शतृशानजन्तं पदं कर्तृपदस्य विशेषणं भवति। कर्मणिशानजन्तं पदं तु कर्मणः विशेषणं भवति। यथा- चैत्रः ओदनं पचति। एतत् कर्तरि शत्रन्तं रूपं भवति। 'ओदनं पचन् चैत्रः' अत्र शत्रन्तस्य पचन् इत्यस्य सम्बन्धः चैत्रः इत्याकारककर्त्रा सह वर्तते। किन्तु 'चैत्रेण ओदनः पच्यते' इति कर्मणि, प्रयोगस्य शानजन्त-प्रयोगे- चैत्रेण पच्यमानः ओदनः इत्यत्रः कर्मणि पच्यमानः इत्याकारकशानजन्तस्य पदस्य सम्बन्धः कर्मपदेन ओदनेन सह एव भवतीति।
अत्र कानिचनोदाहरणानि

राधिका फलं खादति/राधिकया फलं खाद्यते

राधिका फलं खादन्ती/राधिकया खाद्यमानं फलम्

गुरु ज्ञानं ददाति/गुरुणा ज्ञानं दीयते

गुरु ज्ञानं ददत्/गुरुणा ज्ञानं दीयमानम्

इत्यादि। रामेण पाठः पठ्यते। पाठे श्लोकाः सन्ति। एतद्वाक्यं एवमपि लिखितुं शक्नुवन्ति - रामेण पठ्यमाने पाठे श्लोकाः सन्ति। एवमेव-

मात्रा पुत्री पोष्यते, सा खिन्नाऽस्ति।

मात्रा पोष्यमाणा पुत्री खिन्नाऽस्ति।

साम्प्रतं शानच्प्रत्यये कृते मुगागमः क्व भवति क्व न भवतीति विचार्यते- प्रथम-चतुर्थ- षष्ठदशमगणीयानां धातूनां मुगागमो भवति। द्वितीय-तृतीय-पञ्चम-सप्तम-अष्टम-नवमगणीयानां मुगागमो न भवति। यथा-

प्रथमगणस्य - मोदमानः

चतुर्थगणसय- मन्यमानः

षष्ठगणसय - लज्जमानः

दशमगणस्य - चोरयमाणः।

अत्र सर्वत्र मुगागमो जातः।

द्वितीयगणस्य - द्विषाणः

तृतीयगणस्य - ददानः

पञ्चमगणस्य - चिन्वानः

सप्तमगणस्य - भिन्दानः

अष्टमगणस्य - कुर्वाणः

नवमगणस्य - क्रीणानः

अत्र सर्वत्र मुगागमो न भवतीति। कर्मयगन्तानां तु सर्वेषां गणानां धातूनां मुगागमो भवति। यथा- दीयमानः इत्यादिः। एवमेव भविष्यदर्थेऽपि। यथा करिष्यमाणः इत्यादि।

। इत्यलं शानज्विवेचनेन ।